गते च भगवति सहस्र-दीधितावपरार्णव-तटात् (१) उल्लसन्ती (२) विद्रुम-लतेव पाटला (३) सन्ध्या समदृश्यत। (ज) यस्यामाबध्यमानध्यानं, एकदेश-दुह्यमान-होमधेनु-दुग्धधारा-ध्वनि-मनोहरं, (४) अग्नि-होत्र-वेदि-विप्रकीर्य्यमाण-हरित्-कुशम् (५) ऋषि-कुमारिकाभिरितस्ततो विक्षिप्यमाण-दिग्देवतार्च्चन-वलि-सिक्थकं (६) आश्रमपदमभवत्। (झ) क्वापि विहृत्य दिवावसाने (७) लोहिततारका तपोवनधेनुरिव कपिला परिवर्त्तमाना सन्ध्या मुदितैस्तपोधनैरदृश्यत(८)। (ञ)

---

(ज) अस्तमिति। सहस्रदीधितौ सूर्य्ये। अपरार्णवतटात् पश्चिमसमुद्रतीरात् उल्लसन्ती उत्तिष्ठन्ती, विद्रुमलतेव लताकारेण तिर्य्यगवस्थिता प्रवाललतेव पाटला श्वेतरक्ता। अत्रोपमालङ्कारः।

(झ) यस्यामिति। यस्यां सन्ध्यायां आबध्यमानं सन्ध्यावन्दनव्याप्रियमाणैर्मुनिभिः क्रियमाणं ध्यानं परमेश्वरे प्रत्ययैकतानता यस्मिन् तत्, "अत्र प्रत्ययैकतानता ध्यान"मिति पातञ्जलसूत्रात्। एकदेशे आश्रमस्यैकपार्श्वे दुह्यमानानां होमधेनूनां या दुग्धधारास्तासां ध्वनिभिः शब्दैः मनोहरं सुन्दरं। अग्निहोत्राणां तदाख्ययागविशेषाणां वेदिषु परिष्कृतभूमिषु विप्रकीर्य्यमाणा होमीयास्तरणार्थं निक्षिप्यमाणाः हरितः पालाशवर्णाः कुशा यस्मिन् तत्। "सायं प्रातर्जुहोति" इति श्रुत्या तदानीं होमस्य विहितत्वादिति भावः। इतस्ततः सर्वासु दिक्षु, विक्षिप्यमाणाः स्थाप्यमानाः, दिग्देवतानां दिक्पालानां अर्च्चनाय पूजनाय वलिसिक्थाः उपहाररूपान्नानि यस्मिन् तत्। "सिक्थ ओदनसम्भवे।" इति विश्वः।

(ञ) क्वापीति। मुदितैर्ध्यानहृष्टैः तपोधनैर्मुनिभिः, क्वापि तृणमयचेत्रादौ अज्ञातदेशे च, विहृत्य पर्य्यटनं कृत्वा अवस्थाय च, दिवावसाने परिवर्त्तमाना प्रत्यागता, लोहिते रक्ते तारके कनीनिकाद्वयं यस्याः सा, अन्यत्र तु लोहितास्तदानीमपि रक्तरविकिरणसम्पर्काद्रक्ताः तारका नक्षत्राणि यस्यां सा, कपिला स्वर्णवर्णा तपोवनधेनुरिव कपिला पिङ्गलवर्णा, सन्ध्या सायंकालः। अत्र पूर्णोपमालङ्कारः।

---

দেখা গেল, পশ্চিম সমুদ্রের তীর হইতে প্রবাললতার ন্যায় সন্ধ্যারাগ উঠিতেছে। (ঝ) যে সময়ে সন্ধ্যাবন্দনে ব্যাপৃত মুনিগণ ধ্যান করিতেছিলেন, আশ্রমের একদিকে হোমধেনু দোহন করিতে থাকায় দুগ্ধধারার শব্দে আশ্রমটি মনোহর হইয়াছিল; মুনিগণ হোম করিবার নিমিত্ত অগ্নিহোত্র যাগের বেদির উপরে হরিদ্বর্ণ কুশ আস্তরণ করিতেছিলেন, এবং ঋষিকন্যারা দিক্-পালগণের পূজার নিমিত্ত সকল দিকে পক্ব অন্ন রাখিতেছিলেন। (ঞ) ধ্যান করিয়া হৃষ্টচিত্তে অবস্থিত মুনিগণ দেখিতে লাগিলেন যে, কোন নূতন তৃণময় ক্ষেত্রে বিচরণ করিয়া, রক্তবর্ণ-নয়নতারা-সমন্বিত এবং স্বর্ণবর্ণ হোমধেনু যেমন দিবাবসানে প্রত্যাগমন করে, সেইরূপ দিনের বেলায় কোন অজ্ঞাত দেশে থাকিয়া, রক্তবর্ণ-নক্ষত্র-সমন্বিত এবং পিঙ্গলবর্ণ সন্ধ্যা,

---

(१) अपरार्णवतलात्। (२) उपसर्पन्ती। (३) आपाटला। (४)...धाराध्वनित-धन्वतरालि-मनोहरं। (५) अग्निवेदिविकीर्य्यमाण...। (६) दैवतावलिसिक्थं।

(७) दिवसावसाने। (८) मुनिभिः।

अचिर-प्रोषिते च सवितरि शोक-विधुरा कमल-मुकुल-कमण्डलु-धारिणी हंस-सितदुकूल-परिधाना मृणाल-धवल-यज्ञोपवीतिनी (१) मधुकर-मण्डलाक्ष-वलयं (२) उद्वहन्ती कमलिनी दिनपति-(३) समागम-व्रतमिवाचरत्। (ट)। अपर-सागराम्भसि पतिते दिवसकरे (४) तत्पतन-वेगोत्थितं (५) अम्भः-शीकर-निकरमिव तारागणमम्बरं (६) आधारयत्। (ठ) अचिराच्च सिद्ध-कन्यका-विक्षिप्त-सन्ध्यार्च्चन-कुसुम-शवलमिव तारकितं (७) वियदराजत। (ड)। क्षणेन

(ट) अचिरेति। सवितरि सूर्य्ये तेजस्विनि नायके च अचिरप्रोषिते अस्तं गते मृते च, शोकेन विधुरा विह्वला, कमलमुकुलमिव कमण्डलुः कमलमुकुलमिव कमण्डलुश्च तं धारयतीति सा तथोक्ता, हंसा एव सितदुकूलं श्वेतवस्त्रं हंसवत् सितदुकूलञ्च परिधानमधोवस्त्रं यस्याः सा, विधवाया रक्तनीलादिवस्त्रधारण-निषेधादिति भावः। मृणालमिव धवलयज्ञोपवीतं मृणालवत् धवलयज्ञोपवीतञ्च अस्या अस्तीति सा। तथा मधुकरमण्डलं भ्रमरसमूह एव अक्षवलयं जपमाला, मधुकरमण्डलवत् अक्षवलयञ्च, तत् उद्वहन्ती धारयन्ती कमलिनी पद्मलता, पद्मिनीसंज्ञकः स्त्रीविशेषश्च दिनपतेः सूर्य्यस्य पत्युश्च समागमाय पुनः सम्मेलनाय व्रतं आचरदिव। अत्र क्रियोत्प्रेक्षालङ्कारः, तथा स्त्रीपुंलिङ्गाभ्यां कमलिनीदिनपत्योर्नायिका-नायकव्यवहारसमा-रोपात् समासोक्तिश्च, इत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः। तथा श्लेषेण साध्वी पद्मिनी स्त्रीवेत्युपमालङ्कारो व्यज्यत इति "हिममुक्त-चन्द्ररुचिरः सपद्मक" इत्यादिदर्पणोदाहृतवदलङ्कारेणालङ्कारध्वनिः।

"न विधवा रक्तमाद्यात् परिधानं न पीतमसितञ्चे"ति स्मृतेर्हंससितेत्याद्युक्तं। तथा ब्रह्मवादिनीनां स्त्रीणामुपनयनविधानान्मृणालधवलयज्ञोपवीतिनीत्युक्तिः सङ्गच्छते। तथा च हारीतः—"द्विविधाः स्त्रियो ब्रह्म-वादिन्यः सद्योवध्वश्च। तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भैक्षचर्य्येति।

(ठ) अपरेति। अम्बरं आकाशं कर्त्तृ, तस्य दिवसकरस्य पतनवेगेन उत्थितं उद्गतं अम्भःशीकर-निकरमिव जलविन्दुसमूहमिव। अत्र जात्युत्प्रेक्षा।

(ड) अचिरादिति। तारका अस्य सञ्जाता इति तारकितं उदितनक्षत्रसमन्वितं वियत् आकाशं कर्त्तृ, सिद्धानां देवयोनिविशेषाणां याः कन्यकास्ताभिर्विक्षिप्तानि यानि सन्ध्यार्च्चनकुसुमानि सन्ध्याकालीय-

দিন অতীত হইলে পুনরায় প্রত্যাগমন করিতেছে। (ট) অল্প সময়মাত্র সূর্য্য অস্তমিত হইলে পদ্মিনী, তাঁহার শোকে অধীর হইয়া পদ্মকলিকারূপ কমণ্ডলু, হংসরূপ শ্বেতবস্ত্র, মৃণালরূপ ধবল যজ্ঞোপবীত এবং ভ্রমরগণরূপ জপের মালা ধারণ করিয়া পুনরায় সূর্য্যের সহিত সম্মিলিত হইবার জন্যই যেন কোন ব্রত আচরণ করিতে লাগিল। (ঠ) সূর্য্য পশ্চিম সমুদ্রের জলে পতিত হইলে আকাশ যেন, তাঁহারই পতনবেগে উত্থিত জলবিন্দুসমূহের ন্যায় নক্ষত্রসমূহ ধারণ করিল। (ড) অচিরকালমধ্যে নক্ষত্র উঠিল, তখন সিদ্ধকন্যারা সন্ধ্যাকালীয় পূজার

(१) यज्ञोपवीता। (२)...मालावलयं। (३) रवि...। (४) दिनकरे, दिवाकरे।
(५) दिवसकरे वेगोत्थितं पवनवेगोत्थितं पतङ्गवेगोत्थितं। (६) अम्बरतलं। (७) सतारं।

चोन्मुखेन मुनिजनेनोर्द्ध-विप्रकीर्णैः प्रणामाञ्जलि सलिलैः प्रक्षाल्यमान (१) इवागलदखिलः सन्ध्यारागः। (ढ)

क्षयमुपगतायाञ्च (२) सन्ध्यायां तद्विनाश-दुःखिता कृष्णाजिनमिव विभावरी तिमिरोद्गममभिनवमवहत्। (ण)। अपहाय (३) मुनि-हृदयानि (४) सर्वमन्यदन्धकारतां तिमिरमनयत्। (त)। क्रमेण च रविरस्तं गत (५) इत्युदन्तमुपलभ्य जात (६) वैराग्यो धौत-दुकूल-वल्कल-धवलाम्बरः सतारान्तः-

---

पूजापुष्पाणि तैः शवलं चित्रं नानावर्णमिव सत् अराजत। तादृशकुसुमानीव नक्षत्राण्यदृश्यन्तेति भावः। अत्र गुणोत्प्रेक्षालङ्कारः।

(ढ) क्षणेनेति। ऊर्द्धविप्रकीर्णैः ऊर्द्धदिशि निक्षिप्तैः, प्रणामाञ्जलिसलिलैः इष्टदेवतानमस्कारकालीनाञ्जलिपूर्णजलैः प्रक्षाल्यमान इव सन्। सन्ध्यारागः सन्ध्याकालीनो रक्तिमा, अगलत् प्राच्यवत। सन्ध्याकालोऽतीत इति तात्पर्य्यम्। अत्र क्रियोत्प्रेक्षालङ्कारः।

(ण) क्षयमिति। तस्याः सन्ध्याया विनाशेन क्षयेण दुःखिता शोकातुरा विभावरी रात्रिः, कृष्णाजिनमिव कृष्णवर्णचर्म्मेव अभिनवं तिमिरोद्गमं तमिस्रोदयं उत्पन्नमन्धकारराशिमित्यर्थः। बन्धुजनमरणे कृष्णचिह्नं धार्य्यत इत्याचारः। सख्यन्तरशोककातरा सखीवेति भावः। अत्र तद्विनाशदुःखितेव सतीति प्रतीतेर्भावाभिमानिनी प्रतीयमाना गुणोत्प्रेक्षा उपमा चानयोरङ्गाङ्गिभावेन सङ्करः।

(त) अपेति। तिमिरं अन्धकारः, मुनीनां हृदयानि अपहाय परित्यज्य तेषु सर्वदा ब्रह्मालोकस्य विद्यमानत्वादिति भावः। अन्यत् सर्वं वस्तु अन्धकारतां स्वावरणेन चाक्षुषप्रत्यक्षाविषयतामित्यर्थः। एतेन तदानीं कृष्णपक्षस्य प्रतिपत् द्वितीया वा आसीदिति प्रतीयते।

(थ) क्रमेणेति। रविः सूर्य्यः कश्चित् परमप्रियवयस्यश्च, अस्तं अस्ताचलं विनाशञ्च गत इति इत्थं उदन्तं वार्त्तां उपलभ्य ज्ञात्वा, जातं वैराग्यं सर्वविषयेषु वैतृष्ण्यं समैः‌ते वश्या नाहमेतेषां वश्य इति वशीकारसंज्ञा यस्य सः "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्य"मिति पातञ्जलसूत्रात्, पक्षे

---

সময়ে যে পুষ্প নিক্ষেপ করিয়াছিল, তাহাতেই যেন বিচিত্র হইয়া আকাশ শোভা পাইতে লাগিল। (ঢ) ক্ষণকাল পরেই মুনিগণ ঊর্দ্ধমুখ হইয়া ইষ্টদেবতার নমস্কারের সময়ে অঞ্জলিপূর্ণ যে জল ঊর্দ্ধদিকে নিক্ষেপ করিয়াছিলেন, তাহাতেই যেন প্রক্ষালিত হইয়া সন্ধ্যার সমস্ত রক্তিমা আকাশ হইতে পড়িয়া গেল।

(ণ) সন্ধ্যা অতীত হইলে রাত্রি, তাহার অদর্শনে দুঃখিত হইয়াই যেন কৃষ্ণবর্ণ চর্ম্মের ন্যায় নূতন অন্ধকার বহন করিতে লাগিল। (ত) সেই অন্ধকার, মুনিগণের হৃদয় ভিন্ন অন্য সকল পদার্থই আবরণ করিল। (থ) ক্রমে চন্দ্র উদিত হইলেন। তখন দেবর্ষি বশিষ্ঠাদির যে আশ্রমের প্রান্তভাগে অল্প অন্ধকারের ন্যায় তমালবৃক্ষের শ্রেণী আছে, এবং সাত জন ঋষি

---

(१) क्षाल्यमानः। (२) उपगतायां। (३) शापदग्धमिव भयाद्विहायैव। (४) मुनिजनहृदयानि।
(५) उपगतः, उपागतः। (६) समुपजात...।

पुरः, पर्य्यन्त-स्थित-तनु-(१) तिमिर-तमाल-वन-(२) लेखं, सप्तर्षि-मण्डलाध्युषितं, अरुन्धती-सञ्चरण-पवित्रम्, (३) उपहिताषाढ़म्, आलक्ष्यमाणमूलम्, एकान्त-स्थित-चारु-तारकमृगं (४) अमरलोकाश्रममिव गगनतलं (५) अमृत-दीधितिरध्य-तिष्ठत्। (थ)। चन्द्राभरणभूतस्तारका-कपाल-शकलालङ्कृतादम्बरतलात्

जातवैराग्य उत्पन्नविशिष्टरागः। धौतदुकूलवत् प्रक्षालितक्षौमवस्त्रवत् वल्कलमिव धवलं अम्बरं वस्त्रं यस्य सः, अन्यत्र तु धौतदुकूलवल्कलवत् धवलं स्वतेजसा श्वेतं अम्बरं आकाशं यस्य सः, तथा सतारं सज्योतिः अन्तःपुरं हृदयमध्यं यस्य सः ध्याननिष्ठ इत्यर्थः, पक्षे तारा अश्विन्यादीनि नक्षत्राण्येव अन्तःपुराणि अन्तःपुरस्थ-स्त्रियः, तैः सहेति सः। पर्य्यन्ते प्रान्तभागे स्थिता तनुतिमिरवत् अल्पान्धकारवत् तमालवनानां लेखा रेखा यस्मिन् तं, पक्षे पर्य्यन्ते स्थितं तनुतिमिरं स्तोदयाहिरलान्धकारं तमालवनलेखेव यत्र तत्। सप्तानां ऋषीणां येषां केषाञ्चि-न्मुनीनां मण्डलेन गणेन अध्युषितं आश्रितं, पक्षे नक्षत्रात्मकमरीच्यादिसप्तर्षिगणेन अध्युषितं। अरुन्धत्या परमपतिव्रताया वशिष्ठपत्न्या अरुन्धतीनामकनक्षत्रविशेषस्य च सञ्चरणेन विचरणेन पवित्रम्। उपहिता मुनिभिः स्थापिताः आषाढ़ा दण्डा यस्मिन् तं, "आषाढ़ो व्रतिनां दण्डे मासे मलयपर्वते।" इति विश्वः, पक्षे उपहिते सन्निहिते आषाढ़े पूर्वाषाढ़ोत्तराषाढ़े नक्षत्रे यस्मिन् तत्। आलक्ष्यमाणानि दृश्यमानानि मूलानि मुनीनां खाद्यभूतमूलानि यत्र तं, अन्यत्र तु आलक्ष्यमाणं मूलं मूलाख्यनक्षत्रं यस्मिन् तत्। तथा चारू मनोहरे तारके कनीनिकाद्वयं येषां ते तथा, एकान्ते एकपार्श्वे स्थिताः चारुतारकाः मृगा हरिणा यस्मिन् तं, पक्षे एकान्ते स्थितः चारुतारकं सुन्दरनक्षत्रं मृगो मृगशिरा यस्मिन् तत्। "नक्षत्रे नेत्रमध्ये च तारकं तारकापि च।" इति वोपालितः। अमरलोके स्वर्गे य आश्रमो वशिष्ठादितपोवनं तमिव। अमृतदीधि-तिश्चन्द्रः। प्राणोपमबन्धुजनमृत्युवार्त्तामुपेत्यापरो बन्धुजन इवेति भावः। अतएवात्र आश्रमेण सह गगनस्य सादृश्यं वाच्यं तादृशबन्धुजनेन सह चन्द्रस्य सादृश्यन्तु गम्यमित्येकदेशविवर्त्तिन्युपमालङ्कारः श्लेषेण सङ्कीर्य्यते।

যাহাতে বাস করেন, আর সাধ্বী বশিষ্ঠপত্নী অরুন্ধতীর বিচরণে যে আশ্রম পবিত্র হইয়া থাকে এবং যে আশ্রমে পলাশের দণ্ড সকল স্থাপিত আছে, ভোজনের নিমিত্ত ফল মূল দৃষ্টিগোচর হয়, এবং এক প্রান্তে মনোহর নয়নতারাসমন্বিত হরিণগণ বিচরণ করে; সেইরূপ আশ্রমে যেমন কোন প্রণয়ী ব্যক্তি, প্রিয়বয়স্যের মৃত্যুসংবাদ পাইয়া সকল বিষয়ে বৈরাগ্য উৎপন্ন হওয়ায় ধৌত ক্ষৌমবস্ত্রের ন্যায় শ্বেতবর্ণ বল্কল ধারণপূর্ব্বক ধ্যানস্থ হইয়া অবস্থান করে; সেইরূপ চন্দ্র, সূর্য্য অস্তমিত হইয়াছেন, এই বৃত্তান্ত জানিতে পারিয়া বিশেষ উদয়রাগে রঞ্জিত হইয়া তারারূপ স্ত্রীগণের সহিত আকাশে অবস্থান করিতে লাগিলেন; তখন আকাশ পরিষ্কৃত ক্ষৌমবস্ত্র ও বল্কলের ন্যায় ধবলবর্ণ হইল; তমালবৃক্ষশ্রেণীর ন্যায় অল্প অন্ধকার, একপ্রান্তে সরিয়া গেল; সপ্তর্ষিমণ্ডল (নক্ষত্র) উঠিল; অরুন্ধতীনক্ষত্রের উদয়ে আকাশ পবিত্র হইল; চন্দ্রের নিকটে পূর্ব্বাষাঢ়া ও উত্তরাষাঢ়ানক্ষত্র উঠিল; মূলানক্ষত্র দেখা যাইতে লাগিল, এবং

(१)...अन्तःपुरपर्य्यन्तस्थिततनुः...। (२)...वन...। (३)...पूतं। (४)...तारकाम्बरं। (५) गगनं।

त्र्यम्बकोत्तमाङ्गादिव गङ्गा सागरं (१) आपूरयन्ती हंस-धवला धरण्यामपतज्ज्योत्स्ना। (द) हिमकर-सरसि विकच-पुण्डरीक-सिते चन्द्रिका-जलपान-लोभादवतीर्णो निश्चल-मूर्त्तिरमृतपङ्क-लग्न इवाद्दृश्यत (२) हरिणः। (ध)। तिमिर-जलधर-समयापगमानन्तरं (३) अभिनव-सित-सिन्धुवार-(४) कुसुम-पाण्डुरैरर्णवागतैरगाह्यन्त (५) हंसैरिव कुमुद-सरांसि चन्द्रपादैः। (न) विगलित-

(द) त्र्यम्बकेति। सागरं आपूरयन्ती स्वोदयेन स्वजलेन च समुद्रं परिपूर्णं कुर्वती, चन्द्रोदये समुद्रवृद्धेः प्रसिद्धत्वात्, गङ्गापक्षे तु आपूरयन्तीति भविष्यत्सामीप्ये वर्त्तमाना आपूरयिष्यन्तीत्यर्थः। हंसवद्धवला हंसैन धवला च, ज्योत्स्ना, चन्द्र एवाभरणं तद्बिभर्त्तीति तस्मात्, तारका नक्षत्राणि कपालशकलानीव नरशिरोऽस्थिखण्डानीव तैरलङ्कृतात्, अम्बरतलादाकाशात् त्र्यम्बकस्य शिवस्य उत्तमाङ्गान्मस्तकात् गङ्गा इव धरण्यामपतत्। अत्र पूर्णोपमालङ्कारः।

(ध) हिमेति। विकचपुण्डरीकवत् प्रस्फुटश्वेतपद्मवत् सिते श्वेतवर्णे, तैः सिते च, हिमकरश्चन्द्र एव सरः सरोवरस्तस्मिन्, चन्द्रिका ज्योत्स्नैव जलं तस्य पानलोभात् अवतीर्णो मध्यगतः, हरिणश्चन्द्राङ्कगतचिह्नरूपो मृगः, अमृतं चन्द्रसुधैव पङ्कः कर्दमः तत्र लग्नो दृढ़संसक्त इव सन् निश्चलमूर्त्तिः अलक्ष्यत लोकैरदृश्यत। अपरोऽपि हरिणः सरसि पानीयं पातुमवतीर्णः पङ्कमग्नो निश्चलस्तिष्ठति। अत्र चन्द्रिकायाः पानासम्भवात् अमृतस्य तरलतया तत्र तादृशलग्नत्वासम्भवाच्च स्वाङ्गरूपकमेवालङ्कारो न तु लुप्तोपमा, क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

(न) तिमिरेति। अभिनवानि यानि सितानि श्वेतानि सिन्धुवारकुसुमानि निर्गुण्डीपुष्पाणि तद्वत् पाण्डुरैः, तथा अर्णवेभ्यः समुद्रेभ्यः आगतैः, पक्षे समुद्रानपि प्राप्तैः, हंसैरिव चन्द्रस्य पादैः किरणैः तिमिरमन्धकारो जलधरसमयो वर्षाकाल इव कृष्णत्वसाम्यात् तस्य अपगमानन्तरं निवृत्तेः परं कुमुदसरांसि कैरवमयाः सरोवरा अगाह्यन्त आलोड्यन्त अस्पृश्यन्त च। हंसा हि शरत्समये सागरादागत्य सरसि विचरन्तीति स्वभावः। अत्र लुप्तोपमायुगलसङ्कीर्णोपमालङ्कारः।

মনোহর মৃগশিরা নক্ষত্রও এক প্রান্তে উদয় পাইল। (দ) পূর্ব্বকালে সমুদ্রপূরণকারিণী এবং হংসগণের বিচরণে ধবলবর্ণা গঙ্গা যেমন চন্দ্রকলালঙ্কৃত ও নরকোপালশোভিত মহাদেবের মস্তক হইতে ভূতলে পতিত হইয়াছিলেন; তেমন সমুদ্রের পূর্ণতাকারিণী ও হংসের ন্যায় ধবলবর্ণা জ্যোৎস্না, চন্দ্র ও নক্ষত্রগণে পরিশোভিত আকাশ হইতে ভূতলে পতিত হইতে লাগিল। (ধ) প্রস্ফুটিত শ্বেতপদ্মের ন্যায় শ্বেতবর্ণ চন্দ্ররূপ সরোবরে জ্যোৎস্নারূপ জলপান করিবার লোভে অবতীর্ণ হইয়া একটি হরিণ, তাহার অমৃতরূপ কর্দ্দমে মগ্ন হইয়াই যেন নিশ্চলদেহ হইয়া রহিয়াছে বলিয়া দেখা যাইতে লাগিল। (ন) নূতন নিসিন্দাফুলের মত শ্বেতবর্ণ এবং সমুদ্র হইতে আগত হংসগণের ন্যায় চন্দ্রের কিরণসমূহ, বর্ষাকালের ন্যায় অন্ধকাররাশি দূরীভূত হইলে কুমুদ-(সাপলা) পরিপূর্ণ সরোবরসমূহে পতিত হইতে লাগিল।

(१) सागरान्। (२) आलक्ष्यत। (३) समयानन्तरं। (४)...सिन्दुवार...।
(५) अवागाह्यन्त, अगाह्यन्त।

सकलोदयरागं रजनिकर-विम्बमम्बरापगावगाह-धौत-सिन्दूरमैरावत-कुम्भस्थल-मिव तत्क्षणमलक्ष्यत। (प)। शनैः शनैश्च दूरोदिते भगवति हिमसृति (१) सुधा-धूलि-पटलेनेव धवलीकृते चन्द्रातपेन (२) जगति, अवश्यायजलविन्दु-(३) मन्दगतिषु विघटमान-कुमुद-वन-(४) कषाय-परिमलेषु समुपोढ़-निद्रा-भरालस-तारकैरन्योन्य-ग्रथित-पक्ष्मपुटैरारब्ध-रोमन्थ-मन्थर-मुखैः सुखासीनैराश्रममृगैर-भिनन्दितागमनेषु प्रवहत्सु (५) निशामुख-समीरणेषु, (६) अर्द्धयाममात्राव-शिष्टतायां विभावर्य्यां, हारीतः कृताहारं मामादाय सर्वैस्तैः सह मुनिभिः (७)

(प) विगलितेति। विगलितः क्रमेणोर्द्ध गमनादपसृतः, उदयराग उदयकालीनो रक्तिमा यस्य तत्, रजनिकरविम्बं चन्द्रमण्डलं अम्बरापगा आकाशनदी मन्दाकिनी अम्बररूपापगा च तस्यां अवगाहेन मज्जनेन धौतं प्रक्षालितं सिन्दूरं यस्य तत् तथोक्तं, ऐरावतस्य श्वेतवर्णेन्द्रहस्तिनः कुम्भस्थलमिव तत्क्षणं लोकैर-लक्ष्यत। अत्रोपमालङ्कारः।

(फ) शनैरिति। एवम्भूतसमये हारीतः कृताहारं मामादाय पितरं जावालिमुपाचैति वक्ष्यमाणे-नान्वयः। किञ्चेति चार्थः। हिमसृति तुषारवर्षिणि चन्द्रे दूरोदिते सति। तथा जगति भुवने, सुधाया विलेपनद्रव्यविशेषस्य धूलिपटलेनेव रेणुसमूहेनेव चन्द्रस्य आतपेन आलोकेन धवलीकृते सति। अत्रोपमा-लङ्कारः। अवश्यायजलविन्दुभिः शिशिरजलविन्दुवहनैरित्यर्थः मन्दा गतिर्येषां तेषु। इत्यादीनि सप्तम्यन्तपदानि वक्ष्यमाणनिशामुखसमीरणेष्वित्यस्य विशेषणानि। विघटमानस्य प्रस्फुटतः कुमुदवनस्य कषायः सुरभिः परिमलो विमर्द्दगन्धो येषु तादृशेषु। तथा समुपोढ़ेन उपस्थितेन निद्राभरेण निद्रातिशयेन अलसा निस्पन्दाः तारकाः कनीनिका येषां तैः, अन्योन्यं परस्परं ग्रथितानि नयनमुद्रणात् दृढ़संलग्नानि पक्ष्मपुटानि नेत्रलोमानि येषां

(প) উদয়কালের সমস্ত রক্তিমা দূরীভূত হইলে চন্দ্রমণ্ডলটি, মন্দাকিনীর জলে অবগাহন করায় মস্তকের সিন্দুর প্রক্ষালিত হইয়া গেলে ঐরাবত হস্তীর কুম্ভস্থলের ন্যায় সেই সময়ে দেখা যাইতে লাগিল। (ফ) ভগবান্ চন্দ্র, ধীরে ধীরে আকাশের অনেক দূরে উঠিলেন; তখন সুধানামক বিলেপনদ্রব্যের চূর্ণসমূহের ন্যায় (সাদা পাউডারের মত) চন্দ্রের আলোক পৃথিবী-মণ্ডলকে ধবলবর্ণ করিল; প্রদোষসময়ের শীতল সমীরণ, শিশিরবিন্দু বহন করিয়া, বিকসিত কুমুদবনের সৌরভ লইয়া, মন্দগতিতে বহিত হইতে লাগিল; তখন তপোবনের হরিণগণ, সুখে উপবিষ্ট হইয়া মনে মনে সেই বায়ুর আগমনের প্রশংসা করিতে লাগিল; কারণ— সেই বায়ুর সংস্পর্শে তাহাদের অত্যন্ত নিদ্রার আবেশ হওয়ায় নয়নের তারা নিস্পন্দ হইয়া আসিতেছিল; নয়ন মুদ্রিত করায় তাহার লোমগুলি পরস্পর সংলগ্ন হইতেছিল; এই অবস্থায়

(१) हिमततिस्तृति, हिमदीधितौ। (२) क्वचित् 'चन्द्रातपेन' इति पाठो नास्ति।
(३)...विन्दुपतनशीतेषु। (४)...षण्ड...। (५) प्रवात्सु।
(६) समीरेषु। (७) तैर्महामुनिभिः।

उपसृत्य चन्द्रातपोद्भासिनि तपोवनैकदेशे वेत्रासने सुखोपविष्टं (१) अनतिदूरवर्त्तिना जालपादनाम्ना शिष्येण दर्भ-पवित्र-धवित्र-पाणिना (२) मन्दमन्दं (३) उपवीज्यमानं पितरमवोचत् (४) (फ) "तात ! (५) सकलेयमाश्चर्य्य-श्रवण-कुतूहलाकलित-हृदया (६) समुपस्थिता तापस-परिषदाबद्ध-मण्डला प्रतीक्षते (७) व्यपनीत-श्रमश्च कृतोऽयं पतत्रि-पोतः, तदावेद्यतां किमनेन कृतमन्यस्मिन् जन्मनि को वायमभूद्भविष्यति वेति" (८)। एवमुक्तस्तु (९) स महामुनिरग्रतः स्थितं

---

तेः, तथा आरब्धेषु पूर्वमुपक्रान्तेषु रोमन्थेषु उद्गीर्य्य चर्वितचर्वणेषु मन्थराणि निद्रावेशवशादलसानि मुखानि येषां तैः स्थित्वा स्थित्वा रोमन्थं कुर्वाणैरित्यर्थः, सुखासीनैः सुखेनोपविष्टैः आश्रममृगैः, अभिनन्दितं स्पर्श-सुखोपलम्भात् प्रशंसितं आगमनं येषां तेषु. निशासुखसमीरणेषु प्रदोषवायुषु, प्रवहत्सु सञ्चलत्सु सत्सु। तथा विभावर्य्यां रात्रौ, अर्द्धयाममात्रेण अवखण्डितायां न्यूनतां गतायां सत्यां दण्डचतुष्टये अतीत इत्यर्थः। चन्द्रस्य आतपेन आलोकेन ज्योत्स्नया उद्भासते विशेषेण दीप्यत इति तस्मिन्। वेत्रासने वेतसनिर्म्मितासने। दर्भवत् कुशवत् पवित्रं, धवित्रं मृगचर्म्मनिर्म्मितं व्यजनं पाणौ यस्य तेन।

(फ) तातेति। आश्चर्य्यस्य वृत्तान्तस्य यत् श्रवणकुतूहलं तेन आकलितं व्याप्तं हृदयं यस्याः सा। आबद्धं विहितं मण्डलं वर्त्तुलाकारश्रेणीभावेनावस्थानं यया सा तादृशी सती प्रतीक्षते भवद्वाक्यारम्भमपेक्षते।

---

চর্ব্বিত চর্ব্বণ করিতে সেই হরিণগণের মুখ ক্রমে নিশ্চল হইয়া আসিল ; এ দিকে হারীত আমাকে আহার করাইলেন. রাত্রির প্রথম যামার্দ্ধও (চারি দণ্ড) অতীত হইল ; তখন হারীত আমাকে লইয়া সেই সকল মুনিগণের সহিত, পিতা জাবালির নিকট উপস্থিত হইলেন, তখন মহর্ষি জাবালি, চন্দ্রের আলোকে দীপ্যমান তপোবনের এক দিকে বেত্রাসনে সুখে উপবেশন করিয়াছিলেন, অনতিদূরবর্ত্তী জালপাদনামে একজন শিষ্য কুশের ন্যায় পবিত্র মৃগচর্ম্ম-নির্ম্মিত ব্যজন হস্তে করিয়া গুরুর প্রতি মন্দ মন্দ বায়ুসঞ্চালন করিতেছিলেন ; এই অবস্থায় কুমার হারীত পিতাকে বলিলেন—(ব) "পিতঃ ! এই সকল তপস্বিগণ আশ্চর্য্য বৃত্তান্ত শ্রবণ করিবার নিমিত্ত কৌতুকপূর্ণচিত্ত হইয়া উপস্থিত হইয়াছেন এবং মণ্ডলাকারে অবস্থানপূর্ব্বক আপনার কথারম্ভের প্রতীক্ষা করিতেছেন ; এ দিকে এই পক্ষিশাবকটিকেও আহারাদি করাইয়া শ্রান্তিহীন করা হইয়াছে ; অতএব অনুগ্রহপূর্ব্বক বলুন—এ, পূর্ব্বজন্মে কি করিয়াছিল এবং কি ছিল, পরেই বা কি হইবে ?' হারীত এইরূপ বলিলে সেই মহর্ষি জাবালি, সম্মুখস্থিত আমার প্রতি দৃষ্টিপাত করিয়া এবং মুনিগণ যে শ্রবণ করিবার নিমিত্ত

---

(१) वेत्रासनोपविष्टं। (२) नातिदूरवर्त्तिना...पवित्रपाणिना। (३) मन्दं। (४) उवाच।
(५) हे तात ! । (६)...आकुलितहृदया। (७) प्रतीक्ष्यते। (८) यदनेन कृतमपरस्मिन् जन्मनि कोऽयमभूद्भविष्यति चेति। (९ इत्येवमुक्तस्तु।

मामवलोक्य तांश्च सर्वानेकाग्रान् श्रवणतत्परान् (१) मुनीन् बुद्ध्वा शनैः शनैरब्रवीत् (२)—"श्रूयतां यदि कुतूहलम् (३)।" (ब)

---

अयञ्च पतत्रिपोतः पक्षिशावकः, व्यपनीत आहारानुष्ठापनादिना दूरीकृतः श्रमः क्लान्तिर्यस्य सः। स महामुनिर्जाबालिः।

भूयसीं दधदलङ्कृतिश्रियं कोमलध्वनिमनोहरं परम्।
भावभङ्गिमधुरं सुधाधरं पीयतां रसविदा कथामुखम्॥

इति श्रीहरिदाससिद्धान्तवागीशविरचितायां कादम्बरीटीकायां कल्पलतासमाख्यायां
पूर्वभागे कथामुखविवरणम्॥ ०॥

---

একাগ্রচিত্ত ও উৎসুক হইয়াছেন, তাহা বুঝিতে পারিয়া ধীরে ধীরে বলিলেন,—"শোন যদি তোমাদের কৌতূহল জন্মিয়া থাকে।"

---

(१) श्रवणपरान्। (२) शनैरब्रवीत्। (३) कौतूहलम्।

# कादम्बरी।



## अथ कथारम्भः।



### उज्जयिनीवर्णना।



अस्ति सकल त्रिभुवन-ललामभूता, प्रसव-भूमिरिव कृतयुगस्य, आत्मनिवासोचिता भगवता (१) महाकालाभिधानेन भुवनत्रय-सर्ग-स्थिति-संहार-कारिणा(२) प्रमथ-नाथेनापरेव (३) पृथिवी समुत्पादिता, (क) द्वितीय-पृथिवी-शङ्कया च जलनिधिनेव रसातल-गभीरेण (४) परिखा-(५) वलयेन परिवृता, (ख) पशु-

---

(क) अस्तीति। अवन्तीषु उज्जयिनी नाम नगरी अस्तीति बहुदूरवर्त्तिना कर्त्तृपदेनान्वयः। अत्र स्त्रियां प्रथमान्तपदानि उज्जयिनीत्यस्य विशेषणानि। सकले त्रिभुवने ललामभूता प्रधानस्वरूपा। "ललामवत् ललामाश्वे चिह्ने ध्वजपताकयोः। रम्ये प्रधाने भूषायां पुण्ड्रे पुच्छप्रभावयोः।" इति हेमः। कृतयुगस्य सत्ययुगस्य प्रसवभूमिरिव उत्पत्तिस्थानमिव पूर्णावयवधर्म्मवत्त्वादिति भावः। अत्र जात्युत्प्रेक्षालङ्कारः। महाकालाभिधानेन महाकालनाम्ना। तस्य च कालप्रियनाथ इति सुवर्णबिन्दुरिति च नामान्तरद्वयं उत्तररामचरितान्मालतीमाधवाच्च विज्ञायते। सर्गः सृष्टिः। प्रमथनाथेन गणाधीश्वरेण शिवेन, आत्मनिवासोचिता आयतत्वात् पूतत्वाच्च स्वावस्थानयोग्या इति कृत्वा उत्पादिता अपरा पृथिवीव। अत्र द्रव्योत्प्रेक्षालङ्कारः।

(ख) द्वितीयेति। द्वितीयायाः पृथिव्याः शङ्कया भ्रमेण च जलनिधिनेव समुद्रेणेव, रसातलं यावद्गभीरेण निम्नेन परिखावलयेन परिवृता परिवेष्टिता। अत्र जात्युत्प्रेक्षा, तथा रसातलं यावद्गभीरत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिस्तयोरङ्गाङ्गिभावेन सङ्करः।

---

(ক) অবন্তীদেশে, সমস্ত জগতের মধ্যে উৎকৃষ্ট এবং সত্যযুগের উৎপত্তিস্থানের ন্যায় উজ্জয়িনী নামে একটি নগরী আছে। সমগ্র জগতের সৃষ্টি, স্থিতি ও প্রলয়ের কারণ মহাকাল-নামধারী প্রমথাধিপতি ভগবান্ মহাদেব, আপনার বাসের উপযোগী করিয়া, দ্বিতীয় পৃথিবীর ন্যায় যেন সেই নগরটি সৃষ্টি করিয়াছিলেন। (খ) অত্যন্ত গভীর পরিখামণ্ডলে সেই নগরী পরিবেষ্টিত রহিয়াছে; তাহাতে বোধ হয় যেন, সেই নগরীকে দ্বিতীয় পৃথিবী মনে করিয়া

---

(१) क्वचित् 'भगवता' इति पदं नास्ति। (२)...कारिणा। (३)...नाथेनैवापरेव।
(४)...गम्भीरेण। (५) जलपरिखा...।

पति-निवास-प्रीत्या च गगन-परिसरोल्लेखि-(१) शिखरमालेन कैलास-गिरिणेव सुधासितेन प्राकार-मण्डलेन परिगता, (ग) प्रकट-शङ्ख-शुक्ति-मुक्ता-प्रवाल-मरकत-मणिराशिभिश्चामीकर-चूर्ण-सिकता-(२) निकर-निचितै-(३) रायामिभिरगस्त्य-परिपीत-सलिलैः सागरैरिव महाविपणिपथैरुपशोभिता, (घ) सुरासुर-सिद्ध-गन्धर्व-विद्याधरोरगाध्यासिताभिश्चित्रशालाभिरनवरतोत्सवावलोकन-(४) कुतूहलादम्बरतलादवतीर्णाभिर्दिव्यविमानपङ्क्तिभिरिवालङ्कृता, (ङ) मथनोत्थ-

(ग) पशुपतीति। पशुपतेर्महाकालाभिधानस्य शिवस्य निवासेनावस्थानेन या प्रीतिस्तयैव स्थानविषयामोदेनेव, गगनपरिसरस्य आकाशपर्यन्तभुवः उल्लेखिनी घर्षणेनावदारिणी संस्पर्शिनीत्यर्थः शिखरमाला शृङ्गश्रेणिः उपरिभागश्रेणिश्च यस्य तेन, तथा सुधावत् सितेन सुधाभिश्चूर्णविलेपनैः सितेन शुभ्रेण च, कैलासगिरिणेव प्राकारमण्डलेन वप्रोपरि प्राचीरवलयेन, परिगता परिवेष्टिता। अत्र द्रव्योत्प्रेक्षालङ्कारः।

(घ) प्रकटेति। प्रकटाः प्रकाशिताः, शङ्खानां शुक्तीनां मुक्तानां प्रवालानां मरकतमणीनाञ्च राशयः पुञ्जा येषु तैः, चामीकरचूर्णान्येव चूर्णितसुवर्णरेणव एव सिकता वालुकाः तासां निकरेण समूहेन निचिताः शोभाविशेषसम्पादनाय समर्पणात् व्याप्तास्तैः, आयामिभिर्दीर्घैः, अतएव अगस्त्येन मुनिना परिपीतानि सलिलानि जलानि येषां तैः सलिलशून्यतया प्रकटितनानाविधरत्नैरित्यर्थः सागरैरिव स्थितैः, महान्तो हृद्यन्ती ये विपणीनामापणश्रेण्याः पन्थानस्तैरुपशोभिता। अत्र लोकातिशयसम्पत्तिवर्णनादुदात्तालङ्कार उपमा चानयोरङ्गाङ्गिभावेन सङ्करः। तथा तेषु तेष्वापणेषु शङ्खादीनां प्रकटत्वेऽपि तत्सन्निहितपथेषु तत्प्रकटत्वमुपचारात्।

(ङ) सुरेति। सुरैर्देवैः असुरैर्दैत्यदानवैः सिद्धैर्देवयोनिविशेषैः गन्धर्वैर्विद्याधरैः उरगैर्नागैश्च, चित्रशालापक्षे तत्तच्चित्रैः अध्यासिताभिराश्रिताभिः, चित्रशालाभिरालेख्यभवनैः, अनवरत अविश्रान्तो य उत्सवस्तस्यावलोकनकुतूहलाद्धेतोः, अम्बरतलादाकाशात् अवतीर्णाभिर्भूतलमागताभिः दिव्यविमानपङ्क्तिभिरिव स्वर्गीयव्योमयानश्रेणीभिरिव स्थिताभिरलङ्कृता। अत्र जात्युत्प्रेक्षालङ्कारः।

সমুদ্র আসিয়া পরিবেষ্টন করিয়া রহিয়াছে। (গ) অত্যন্ত উচ্চ ও চূর্ণবিলেপনে শুভ্রবর্ণ প্রাচীরমণ্ডলেও সেই নগরী পরিবেষ্টিত হইয়াছে; তাহাতেও প্রতীতি হয় যে, 'স্বয়ং পশুপতি মহাকালরূপে এখানে বাস করিতেছেন', এই আমোদেই যেন গগনস্পর্শী শৃঙ্গমালাসমন্বিত কৈলাসপর্ব্বত আসিয়া পরিবেষ্টন করিয়া রহিয়াছে; (ঘ) অগস্ত্য সমস্ত জল পান করিয়া ফেলিলে শুষ্ক সাগরসমূহের ন্যায় বহুদূরবিস্তৃত ও প্রকাণ্ড রথ্যাসমূহ সেই রাজধানীর শোভা জন্মাইতেছে, স্বর্ণ চূর্ণ করিয়া সেই বালুকারাশিদ্বারা সেই রথ্যাসমূহ নির্ম্মিত হইয়াছে এবং তাহার দুই দিকে সারি সারি দোকান; তাহাতে শঙ্খ, ঝিনুক, মুক্তা, প্রবাল ও মরকত প্রভৃতি রাশি রাশি মণি সাজান আছে; (ঙ) অবিশ্রান্ত উৎসব দর্শন করিবার নিমিত্ত

(१) गगनतलोल्लेखि…। (२)…वालुका…। (३)…रचितैः। (४) अविरतोत्सवप्रमदावलोकन…।

दुग्ध-धवलित-(१) मन्दर-द्युतिभिः कनकमयामल-कलश-शिखरैरनिल-दोलायित-सित-ध्वजैरुपरि-पतदभ्रगङ्गैरिव तुषार गिरि-शिखरैरमरमन्दिरैर्विराजित-शृङ्गाटका, (च) सुधावेदिकोपशोभितोदपानैरनवरत-चलित-जल-घटी-यन्त्र-सिच्यमान-हरितोपवनान्धकारैः केतकी-धूलि-धूसरैरुपशल्यकैरुपशोभिता, (२) (छ) मद-मुखर-मधुकर-पटलान्धकारित-(३) निष्कुटा, (ज) स्फुरदुपवन-लता-

(च) मथनेति। मथने क्षीरोदसमुद्रमन्थनवेलायां उद्गतैर्मन्थनवेगेनोत्थितैः दुग्धैः सप्तसागरस्थपयोभिः धवलितः शुक्लीकृतः यो मन्दरः मन्थनदण्डीकृतो मन्दरपर्वतस्तस्य द्युतिरिव द्युतिः कान्तिर्येषां तैः, कनकमयाः सुवर्णनिर्म्मिताः अमलाः स्वच्छाः कलशाः शिखरेषु उपरिभागेषु येषां तैः, तथा अनिलेन वायुना दोलायिताः सञ्चालिताः सितध्वजाः शुभ्रपताका येषु तैः, "चिह्नशीफपताकासु खट्वाङ्गेऽपि ध्वजोऽस्त्रिया"मिति त्रिकाण्डशेषः, अतएव पतन्ती अभ्रगङ्गा आकाशगङ्गा येषु तैः, तुषारगिरिशिखरैः हिमाद्रिशृङ्गैरिव, अमरमन्दिरैः उच्चैर्देवगृहैः, विराजितानि शोभितानि शृङ्गाटकानि चतुष्पथानि यस्यां सा "शृङ्गाटकचतुष्पथे" इत्यमरः। अत्र लुप्तोपमोपमयोरङ्गाङ्गिभावेन सङ्करः।

(छ) सुधेति। सुधावेदिकाभिः पिपासुजनोपवेशनार्थाभिः चूर्णलिप्तपरिष्कृतभूमिभिः उपशोभितानि उदपानानि कूपा येषु तैः, "पुंस्येवान्धुप्रहि कूप उदपानन्तु पुंसि वा।" इत्यमरः। अनवरतं चलितैर्घूर्णितैः जलघटीयन्त्रैः जलकुम्भनिर्म्मितयन्त्रैः सिच्यमानानि यानि हरितानि हरिद्वर्णानि उपवनानि तान्येव निविडश्यामत्वादन्धकारा येषु तैः, तथा केतकीनां कुसुमानां धूलिभिः परागैः धूसराणि धूम्रवर्णानि तैः, उपशल्यकैः ग्रामान्तैः उपशोभिता। "ग्रामान्त उपशल्यं स्या"दित्यमरः।

(ज) मदेति। मदेन मधुपानजनितमत्ततया मुखरं शब्दायमानं यत् मधुकरपटलं भ्रमरसमूहस्तेन अन्धकारिता अन्धकारविशिष्टीकृताः निष्कुटा भवनसमीपस्थोपवनानि यस्यां सा। एतेन नानाविधकुसुमशोभातिशयः सूचितः। "गृहारामास्तु निष्कुटा" इत्यमरः।

কৌতুকবশতঃ আকাশ হইতে ভূতলে অবতীর্ণ দেবগণ প্রভৃতির স্বর্গীয় বিমানশ্রেণীর ন্যায় অসংখ্য চিত্রশালাতেও সেই রাজধানী অলঙ্কৃত হইয়াছে, কারণ—সেই চিত্রশালাসমূহের মধ্যে দেব, দানব, সিদ্ধ, গন্ধর্ব্ব, বিদ্যাধর ও নাগগণের নানাবিধ চিত্র রহিয়াছে; (চ) প্রত্যেক চতুষ্পথের (চৌরঙ্গীর) নিকটে অত্যন্ত উচ্চদেবতার মন্দির আছে; সেগুলি, ক্ষীরোদসাগরমন্থনের সময় উদ্বেলিত দুগ্ধে ধবলীকৃত মন্দরপর্ব্বতের ন্যায় শুভ্রকান্তি এবং তাহার উপরে সুবর্ণময় নির্ম্মল কলশ স্থাপিত আছে, বায়ুবেগে তাহার শ্বেতপতাকা সকল আন্দোলিত হইতে থাকে, তাহাতে উপরে আকাশগঙ্গা পতিত হইতে লাগিলে হিমালয়ের শৃঙ্গসকলের ন্যায় সেই দেবমন্দিরগুলি দৃষ্টিগোচর হইয়া থাকে; (ছ) নগরের প্রান্তভাগ কেতকীকুসুমের রেণুতে ধূসরবর্ণ হইয়া যায় এবং সেই স্থানের উদ্যানসমূহ, অবিশ্রান্ত ঘূর্ণমান জলযন্ত্রের জলে সিক্ত হইতে

(१) मन्थनोद्धतदुग्धसिन्धुधवल...। (२) विभूषिता। (३)...कुलान्धकारित...।

कुसुम-परिमल-सुरभि-समीरणा, ( झ ) रणित-सौभाग्यघण्टैरालोहिता-ंशुकपताकैराबद्ध-रक्तचामरैर्विद्रुममयैः प्रतिभवनं (१) उच्छ्रितैर्मकराङ्कितैः (२) मदन-यष्टिकेतुभिः (३) प्रकाशित-मकरध्वज-पूजा, ( ञ ) सतत-प्रवृत्ताध्ययन-ध्वनि-धौत-कल्मषा, ( ट ) स्तिमित-मुरज-रव-गम्भीर-गर्जितेषु सलिल-शीकरा-सार-रचित-(४) दुर्दिनेषु पर्य्यन्त-रवि-किरण-रचित-(५) सुर-चाप-चारुषु धारा-गृहेषु मत्त-मयूर-मण्डलै-(६) र्मण्डलीकृत-शिखण्डैस्ताण्डवव्यसनिभिराबध्यमान-

( झ ) स्फुरदिति। स्फुरन्तीनां वायुभरेण स्पन्दमानानां उपवनलतानां यानि कुसुमानि तेषां परिमलेन विमर्द्दगन्धेन सुरभिर्घ्राणतर्पणः समीरणो वायुर्यस्यां सा।

( ञ ) रणितेति। रणिताः शब्दिताः सौभाग्यघण्टाः सौभाग्यसूचिका घण्टा येषु तैः, आलोहिता सम्यग्-रक्ता अंशुकपताका येषु तैः, आबद्धानि रक्तचामराणि येषु तैः, विद्रुममयैः प्रवालप्रचुरैः, मकराङ्कितैर्मदनस्य मकरध्वजत्वान्मकराकारपुत्तलकचिह्नितैः, प्रतिभवनं प्रत्येकवाटेषु उच्छ्रितैरुत्तोलितैः मदनयष्टिकेतुभिः मदन-द्रुमनिर्म्मितकन्दर्पध्वजैः प्रकाशिता सूचिता मकरध्वजस्य कामस्य पूजा यस्यां सा, तत्पूजायां तादृशध्वजो-त्तोलनस्य शास्त्रीयत्वादिति भावः।

( ट ) सततेति। सततप्रवृत्तैर्निरन्तरोत्थितैः अध्ययनध्वनिभिर्वेदपाठशब्दैः धौतमपसारितं कल्मषं पापं यस्याः सा। एतेन सा नगरी न केवलं भोगविलासाश्रयः, अपि तु वेदादिशास्त्रानुशीलनस्थानमपीति सूचितम्।

( ठ ) स्तिमितेति। स्तिमितः समन्ततो भित्तिनिरोधेन निश्चलः मुरजरवो मृदङ्गध्वनिः गम्भीरगर्जितं मन्द्रमेघस्तनितमिव येषु तेषु, सलिलशीकराणां जलयन्त्रनिःसृतजलबिन्दूनां आसारेण धारासम्पातेन रचितं कृतं दुर्दिनं मेघाच्छन्नदिनं येषु तेषु, तथा पर्य्यन्तैः काचकपाटादिषु निपतितैः रविकिरणैः रचितं कृतं

থাকে এবং সেখানে শুভ্রবর্ণ বেদিতে পরিবেষ্টিত বহুতর কূপ আছে ; ( জ ) বাসভবনের নিকটে বহুতর উদ্যান আছে, ভ্রমরগণ মধুপানে মত্ত হইয়া 'গুন্ গুন্' রব করতঃ সেই উদ্যানসমূহ অন্ধকার করিয়া অবস্থান করে ; ( ঝ ) উপবনের লতাগুলি বায়ুভরে দুলিতে থাকে, তখন কুসুমসৌরভে বায়ু বড়ই তৃপ্তিকর হয় ; ( ঞ ) প্রত্যেক বাটীতে প্রবালমালাবেষ্টিত মকরচিহ্নে চিহ্নিত মদনধ্বজ উত্তোলিত হয়, বায়ুভরে তাহার ঘণ্টাগুলি শব্দ করে, রক্ত পতাকা দুলিতে থাকে এবং রক্ত চামর আন্দোলিত হয়, তাহাতে সেই সকল বাটীতে যে কামদেবের পূজা হইয়া গিয়াছে, তাহা সেই সকল ধ্বজগুলিই প্রকাশ করে ; ( ট ) সর্ব্বদা বেদপাঠের শব্দে পাপ বিনষ্ট হইতেছে ; ( ঠ ) জলযন্ত্রের গৃহমধ্যে মত্ত ময়ূরগণ পুচ্ছদেশ মণ্ডলাকার করিয়া, নৃত্য করিতে প্রবৃত্ত হইয়া কেকারবে ( ময়ূরের শব্দের নাম—'কেকা' ) কোলাহল করিতেছে ; কারণ—সেই জলযন্ত্রের গৃহমধ্যে গম্ভীর মেঘগর্জ্জনের ন্যায় মৃদঙ্গের শব্দ, ভিত্তির আবরণে

(१) प्रतिमन्दिरं। (२) मकराङ्कैः। (३) मदनयष्टिकेतुभिः।
(४)...सारकरचित...। (५)...दिवसकरकिरणस्तबकरचित...। (६) मत्तमयूरैः।

केकारव-कोलाहला, (ठ) विकच-कुवलय-कान्तैरुत्फुल्ल-कुमुद-(१) धवलोदरै-रनिमिष-दर्शन-रमणीयैराखण्डल-लोचनैरिव सहस्र-संख्यैरुद्भासिता सरोभिः, (ड) अविरल-कदली-वन-कलिताभिरमृतफेनपुञ्ज-पाण्डुराभिर्दिग्भि दिग्भि (२) दन्त-वलभिकाभिर्धवलीकृता, (ढ) यौवन-मदमत्त-मालवी-कुच-कलस-क्षुभित-सलिलया भगवतो महाकालस्य शिरसि सुर-सरितमालोक्य समुपजातेर्ष्ययेव

यत् सुरचापमिन्द्रधनुस्तेन चारुषु, धारागृहेषु जलयन्त्रभवनेषु, ताण्डवव्यसनिभिर्नृत्यासक्तैः अतएव मण्डली-कृतशिखण्डैर्लीलाकारीकृतपिच्छैः मत्तमयूरमण्डलैः, आबध्यमानः क्रियमाणः केकारवात्मकः कोलाहलो यस्यां सा। "केका वाणी मयूरस्य" इत्यमरः। अत्र स्तिमितेत्यादिविशेषणे लुप्तोपमा, तथा मण्डलैरित्यादौ वृत्त्यनुप्रास इत्युभयोः संसृष्टिः। तथा मुरजरवादौ मयूराणां मेघगर्जनादिभ्रमाद्भ्रान्तिमानलङ्कारो व्यज्यत इति वस्तुनालङ्कारध्वनिः।

(ड) विकचेति। विकचैः प्रस्फुटैः कुवलयैर्नीलोत्पलैः कान्तानि सुन्दराणि तैः, अन्यत्र तु विकच-कुवलयवत् कान्तैः। उत्फुल्लैः कुमुदैः श्वेतोत्पलैः धवलानि उदराणि मध्यस्थानानि येषां तैः, पक्षे उत्-फुल्लकुमुदवत् धवलोदरैः। तथा अनिमिषाणां नानाविधमत्स्यानां दर्शनेन रमणीयैः, पक्षे अनिमिषं देवत्वा-न्निर्निमेषं यद्दर्शनं दृष्टिपातस्तेन रमणीयैः। आखण्डललोचनैः इन्द्रस्य चक्षुर्भिरिव सहस्रसंख्यैः सरोभिः सरोवरैः उद्भासिता शोभिता। अत्र पूर्णोपमालङ्कारः।

(ढ) अविरलेति। अविरला निविडा याः कदल्यः पताकास्तासां वनेन समूहेन कलिताभिराकीर्णाभिः, "कदली वैजयन्त्याञ्च रम्भायां हरिणान्तरे।" इत्यादि विश्वः। अमृतस्य सुधायाः फेनपुञ्जवत् पाण्डुराभिः शुभ्राभिः, दन्तवलभिकाभिः गजदन्तनिर्म्मितचन्द्रशालाभिः उपरिगतचन्द्रगृहैरित्यर्थः। "शुद्धान्ते वड़भी चन्द्रशाले सौधोर्द्धवेश्मनि।" इति रभसः। अत्र लुप्तोपमालङ्कारः।

(ण) यौवनेति। यौवनमदमत्तानां मालवीनां तत्स्थानस्य मालवदेशान्तर्गतत्वात् मालवदेशीय-

আবদ্ধ হইয়া রহিয়াছে, জলযন্ত্র হইতে অবিশ্রান্ত জলবিন্দুবর্ষণে দুর্দ্দিন করিয়া তুলিতেছে, আর কাঠের কপাটের উপর সূর্য্যের কিরণ পতিত হইয়া ইন্দ্রধনুর ন্যায় শোভা করিতেছে; (ড) প্রস্ফুটিত নীলোৎপল সমূহের ন্যায় সুন্দর, বিকসিত কুমুদগণের ন্যায় শ্বেতবর্ণমধ্য এবং নির্নিমেষ দর্শনে বিশেষ মনোহর ইন্দ্রের সহস্রসংখ্যক নয়নের ন্যায় বহুতর সরোবর সেই রাজধানীর শোভা জন্মাইতেছে;—কারণ—সেই সরোবরগুলি প্রস্ফুটিত নীলোৎপলে সুন্দর দেখা যাইতেছে, শ্বেতোৎপল বিকসিত হইয়া সরোবরগুলির মধ্যস্থান শ্বেতবর্ণ করিয়াছে এবং নানাবিধ মৎস্য দর্শনে সেগুলিকে বিশেষ সুন্দর দেখা যাইতেছে; (ঢ) ঘন ঘন পতাকা-সংযুক্ত এবং অমৃতফেনপুঞ্জের ন্যায় শুভ্রবর্ণ হস্তিদন্তনির্ম্মিত চন্দ্রশালা (চিলে কোঠা) সেই রাজধানীর সকলদিক্ শুভ্রবর্ণ করিয়াছে; (ণ) উজ্জয়িনীকে পরিবেষ্টন করিয়া শিপ্রানদী প্রবাহিত হইতেছে; যৌবনগর্ব্বিত মালবদেশীয় রমণীগণ, অবগাহনের সময় কুচকলসের

(१)...कमल...। (२) दिग्भि।

सततावद्ध-(१) तरङ्गभ्रूकुटीलेखया खमिव क्षालयन्त्या शिप्रया परिक्षिप्ता, (त) सकल-भुवन-ख्यात-यशसा (२) (त) हरजटा-चन्द्रेणेव कोटिसारेण (थ) मैनाकेनेवाविदित-पक्षपातेन (द) मन्दाकिनी-प्रवाहेणेव प्रकटित-कनक-पद्म-राशिना (ध) स्मृतिशास्त्रेणेव सभावसथ-कूप-प्रपा-राम-सुरसदन-सेतु-यन्त्र-प्रवर्त्तकेन (न)

---

रमणीनां कुचकलसैः क्षुभितमालोड़ितं सलिलं जलं यस्यास्तथा, महाकालस्य तदाख्यस्य तत्रत्यशिवस्य। सुरसरितं गङ्गां। सततं आबद्धा कृता तरङ्गा एव भ्रूकुटीलेखा भ्रूभङ्गश्रेणिर्यया तया, खं आकाशं क्षालयन्त्येव स्थितया शिप्रया शिप्रानामिकया नद्या परिक्षिप्ता परिवेष्टिता। अत्र कार्य्येण शिप्रायां सपत्नीव्यवहारसमारोपात् रूपकगर्भा समासोक्तिरलङ्कारः क्रियोत्प्रेक्षाचयश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः।

(त) सकलेति। सकलेषु भुवनेषु ख्यातं प्रथितं यशो यस्य तेन। इत्यतस्तृतीयान्तपदानि वक्ष्यमाणस्य अधिष्ठितेतिक्रियाकर्त्तृभूतस्य विलासिजनेनेत्यस्य विशेषणानि।

(थ) हरेति। हरस्य शिवस्य जटायां यश्चन्द्रस्तेनेव, कोटिः कोटिसंख्यकं सारं धनं यस्य तेन, अन्यत्र तु कोटिरग्रभाग एव सारः स्थिरांशः अवशिष्टांशो वा यस्य तेन। अत्र पूर्णोपमालङ्कारः।

(द) मैनेति। मैनाकेन तदाख्येन हिमाचलपुत्रेण पर्वतविशेषेणेव, अविदितः अज्ञातः पक्षपातः वादिप्रतिवादिनोरेकतरपक्षग्रहणं येन तेन, अन्यत्र तु अविदितः अननुभूतः पक्षयोः पतत्रयोः पातः इन्द्रकर्त्तृकच्छेदात् पतनं येन तेन। पूर्णोपमा। पुरा किल इन्द्रकर्त्तृकसकलाचलपक्षच्छेदकाले हिमाचलात्मजो मैनाकः पलायमानो जलनिधावमज्जदिति शिवपुराणवार्त्ता।

(ध) मन्देति। मन्दाकिन्याः स्वर्गगङ्गायाः प्रवाहेणेव, प्रकटितः प्रकाशितः कनकानां सुवर्णानां पद्मराशिः पद्मसंख्यकपुञ्जो येन तेन, एतेन तेषां गुप्तधनसंख्या इतोऽप्यधिकेति सूचितं। अन्यत्र तु प्रकटितः प्रस्फुटितः कनकपद्मराशिः स्वर्णमयकमलसमूहो यस्मिन् तेन। पूर्णोपमा।

(न) स्मृतीति। स्मृतिशास्त्रेणेव धर्म्मप्रतिपादकशास्त्रेणेव, सभा धर्म्मदेशाद्युन्नतिविधायिनी परिषत्,

---

আস্ফালনে সেই শিপ্রার জল আলোড়িত করিয়া থাকে; আর মাহাত্ম্যশালী তত্রত্য মহাকালরূপী মহাদেবের মস্তকে গঙ্গাকে দর্শন করিয়া ঈর্ষ্যান্বিত হইয়াই যেন সেই শিপ্রানদী সর্ব্বদা তরঙ্গরূপ ভ্রূকুটি করিতেছে এবং উত্তালতরঙ্গমালায় আকাশ যেন প্রক্ষালন করিতেছে; (ত) উজ্জয়িনীতে বহুতর বিলাসী লোক বাস করে, তাহাদের যশ জগতের সর্ব্বত্র বিখ্যাত আছে; (থ) মহাদেবের জটাতে যেমন চন্দ্রের একটি কলা আছে, তাহাতেও তেমন কোটিসংখ্যক ধনসম্পত্তি আছে; (দ) মৈনাকপর্ব্বত যেমন ইন্দ্রকর্তৃক পক্ষচ্ছেদন কাহাকে বলে তাহা জানে নাই, উজ্জয়িনীর অধিবাসিগণও তেমন বাদী বা প্রতিবাদীর পক্ষপাত কাহাকে বলে, তহা জানে না; (ধ) মন্দাকিনীর প্রবাহে যেমন অসংখ্য স্বর্ণপদ্ম প্রকাশিত থাকে, তাহাদেরও তেমন পদ্মসংখ্যক (বহুকোটি) স্বর্ণ প্রকাশ্যভাবেই আছে; (ন) স্মৃতিশাস্ত্র, সভা, অনাথাশ্রম, কূপ, পানীয়শালা, উপবন, দেবালয়, সেতু ও

---

(१) सततं समावद्ध…। (२) निखिलभुवनतलख्यातयशसा।

मन्दरेणेवोद्धृत-(१) समस्त-(२) सागर-रत्नसारेण (प) संगृहीत-गारुड़ेनापि भुजङ्ग-भीरुणा (३) (फ) खलोपजीविनाऽपि (४) प्रणयिजनोपजीव्यमानविभवेन (ब) वीरेणापि विनयवता (भ) प्रियंवदेनापि सत्यवादिना (म) अभिरूपेणापि

---

आवसथः अनाथावासः, कूपः क्षुद्रजलाशयः, प्रपा पानीयशाला, आराम उपवनं, सुरसदनं देवगृहं, सेतुः कुल्यादिसन्तरणपथः, यन्त्रं पथिकाद्यर्थं जलयन्त्रादिः, एतेषां प्रवर्त्तकः साधारणोपकारार्थं निर्म्माता, स्मृति-शास्त्रपक्षे विधायकं तेन। पूर्णोपमा।

(प) मन्दरेणेति। मन्दरेणेव तदाख्यपर्व्वतेनेव, उद्धृतं क्रयादिना संगृहीतं समस्तसागररत्नानां सारमुत्कृष्टांशो येन तेन, मन्दरपक्षे तु उद्धृतं मन्थनेनोत्तोलितं समस्तं सागररत्नानां क्षीरोदसमुद्रगतरत्नानां सारं अमृतैरावताद्युत्कृष्टभागो येन तेन। पूर्णोपमा।

(फ) संगृहीतेति। 'संगृहीतं शिक्षितं गारुड़ं विषचिकित्साशास्त्रं येन तथाभूतेनापि भुजङ्गभीरुणा सर्पाद्भयशीलेनेति विरोधः, संगृहीतं क्रयादिना आनीतं गारुड़ं मरकतमणिर्येन तेन, भुजङ्ग-भीरुणा वेश्यासक्तजनसंसर्गाद्भयशीलेनेति तत्परिहारः। अत्र विरोधाभासोऽलङ्कारः। "गारुड़ं स्यान्मरकते विषशास्त्रेऽपि गारुडम्।" "भुजङ्गः षिड्गसर्पयोः।" इति च विश्वः।

(ब) खलोपेति। खला दुर्जना उपजीविन आश्रयिणो यस्य तथाभूतेनापि, प्रणयिजनैर्विश्वस्तलोकैः सज्जनैरित्यर्थः उपजीव्यमान आश्रीयमाणो विभवो धनसम्पत्तिर्यस्य तेनेति सज्जनदुर्ज्जनयोरेकाश्रयासम्भवा-द्विरोधः, खलोपजीविना भूमिसम्पत्त्युपजीविनेति तत्समाधानं। विरोधाभासः। "खलं भूस्थानकल्केषु नीच-क्रूराधमे त्रिषु।" इति मेदिनी।

(भ) वीरेणेति। वीरेणापि विनयवता नमनशीलेनेति विरोधः, शिक्षावतेति तत्समाधानं। विरोधाभासः। "विनयः शिक्षाप्रणत्यो"रिति हैमः।

(म) प्रियमिति। प्रियंवदेनापि सत्यवादिनेति सर्व्वत्र प्रियंवदत्वे मिथ्यावादस्यावश्यकत्वाद्विरोधः, मितभाषित्वाच्च तत्समाधानं। विरोधाभासः।

---

जलयन्त्रादির যেমন বিধি দিয়া থাকে, তাহারাও তেমন পরের উপকারের জন্য সেই সভাপ্রভৃতি করিয়া থাকে; (প) মন্দরপর্ব্বত যেমন সমুদ্রমন্থনের সময় সমুদ্রের সকল রত্নের সার অমৃত ও ঐরাবতহস্তিপ্রভৃতি উদ্ধৃত করিয়াছিল, তাহারাও তেমন সমস্ত সাগরের রত্ন-সমূহের সারভাগ ক্রয়াদিদ্বারা সংগ্রহ করিয়াছে; (ফ) তাহারা বিষচিকিৎসা জানিয়াও সর্পভীরু; (সমাধান—মরকতমণি সংগ্রহ করিয়াছে এবং বদমাইসকে ভয় করে;) (ব) দুর্জ্জনদিগের আশ্রয়দাতা হইলেও, সজ্জনগণ তাহাদের সম্পত্তি ভোগ করে; (ভূমিসম্পত্তি তাহাদের জীবিকা, প্রণয়িজন তাহাদের সম্পত্তি ভোগ করে;) (ভ) তাহারা বীর হইয়াও অবনত; (বীর এবং শিক্ষিত;) (ম) প্রিয়ভাষী হইয়াও সত্যবাদী; (টীকা দ্রষ্টব্য) (য) রূপের

---

(१) उद्धृत...। (२)...समग्र...। (३) भुजङ्गसङ्गभीरुणापि। (४) खलखलोपजीविनापि।

स्वदारसन्तुष्टेन (य) अतिथिजनाभ्यागमार्थिनापि परप्रार्थनानभिज्ञेन, (र) कामार्थपरेणापि धर्म्मप्रधानेन, (ल) महासत्त्वेनापि परलोक-भीरुणा, (व) सकल-विज्ञान-विशेषविदा (१) वदान्येन (२) दक्षेण स्मितपूर्वाभिभाषिणा परिहास-पेशलेन उज्ज्वल-वेशेन शिक्षिताशेषदेशभाषेण वक्रोक्ति-निपुणेन आख्यायिकाख्यान-परिचय-चतुरेण सर्वलिपिज्ञेन महाभारत-पुराण-रामायणानुरागिणा वृहत्कथा-कुशलेन द्यूतादि-कला-कलाप-पारगेण श्रुतरागिणा सुभाषित-

(य) अभीति। अभि अभिमतं रूपं यस्य तेन रूपपक्षपातिनेत्यर्थः, तथापि स्वदारसन्तुष्टेनेति रूपपक्षपातित्वे स्वभार्य्यायां कुरूपायां परभार्य्यायान्तु सुरूपायां तत्प्रीतेरवश्यम्भावाद्विरोधः, अभिरूपेण पण्डितेनेति तत्परिहारः। विरोधाभासः। अभिरूपो बुधे रम्ये" इति मेदिनी।

(र) अतिथीति। अतिथिजनानां अभ्यागमार्थिनापि परप्रार्थनानभिज्ञेनेत्यतिथीनामपि परत्वाद्विरोधः, परैश्वर्थप्रार्थनानभिज्ञेनेति तत्परिहारः। विरोधाभासः।

(ल) कामेति। कामो रतिः, अर्थो धनं तौ परावुत्तमौ प्रधानौ यस्य तथाभूतेनापि सता, धर्म्म एव प्रधानं यस्य तेनेति विरोधः, कामार्थव्यापृतेनापि धर्म्मः प्रधानं प्रधानभावेन सेवनीयो यस्य तेनेति तत्समाधानम्। विरोधाभासः। "दूरानात्मोत्तमा परा" इत्यमरः।

(व) महेति। महासत्त्वेनापि महाबलेनापि परलोकात् शत्रुजनात् भीरुणेति विरोधः, जन्मान्तरभीरुणा जन्मान्तरेऽनिष्टजनकैहिकपापाचरणाच्छशीलेनेति तत्परिहारः। विरोधाभासः।

(श) सकलेति। सकलानां विज्ञानानां शिल्पशास्त्रादिज्ञानानां विशेषं तारतम्यं वेत्तीति तेन नानाविधशिल्पशास्त्रिणासुत्कर्षापकर्षविवेचनसमर्थेनेत्यर्थः, एतेन तस्यापि तदभिज्ञत्वं सूचितं। अथवा सकलविज्ञानानि सकलविज्ञानविषयीभूतानि शिल्पानि शास्त्राणि च विशेषेण वेत्तीति तेन। "मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयो"रित्यमरः। वदान्येन दानशीलेन। दक्षेण सर्वकार्य्यनिपुणेन। परिहासपेशलेन नर्म्मवचननिपुणेन। शिक्षिता अभ्यस्ताः अशेषाणां सर्वेषां देशानां भाषाः शौरसेन्यादयो येन तेन। वक्रोक्तौ "अन्यस्यान्यार्थकं वाक्य"मित्यादिदर्पणोक्तलक्षणायां कुटिलवाचि निपुणेन। आख्यायिकाख्यानयोर्गद्यकाव्यविशेषचूर्णकयोः परिचये विशेषज्ञाने निपुणस्तेन। सर्वलिपिज्ञेन सर्वप्रकाराक्षरपरिचयशालिना। रामायण-

পক্ষপাতী হইয়াও নিজভার্য্যাতেই সন্তুষ্ট (পণ্ডিত ও নিজভার্য্যাতেই সন্তুষ্ট); (র) অতিথির আগমন প্রার্থনা করিলেও পরের প্রার্থনা জানে না (অতিথির আগমন প্রার্থনা করে, কিন্তু পরের নিকট অর্থের প্রার্থনা জানে না); (ল) কাম ও অর্থকে প্রধান বলিয়া মনে করিলেও ধর্ম্মকে প্রধান বলিয়া মনে করে (কাম ও অর্থ সেবায় ব্যাপৃত থাকিয়াও প্রধানভাবে ধর্ম্মসেবাই করে); (ব) মহাবলবান্ হইয়াও শত্রুভীরু (মহাবলবান্ এবং পরজন্মে অনিষ্টের জনক পাপ হইতে ভয় করে); (শ) এবং তাহারা সকলপ্রকার শিল্প ও শাস্ত্র জানে, দানশীল, সকল কার্য্যে চতুর, ঈষৎ হাস্য করিয়া কথা বলে, পরিহাস করিতে নিপুণ, উজ্জ্বল বেশধারী,

(१)...विदा विद्यावदातेन दानशीलेनादीनेन। (२) वदान्येन इति क्वचिन्नास्ति।

व्यसनिना प्रशान्तेन (ग) सुरभिमास-मारुतेनेव सतत-दक्षिणेन (घ) हिमगिरि-काननेनेवान्तःसरलेन (ङ) लक्ष्मणेनेव रामाराधन-निपुणेन (च) शत्रुघ्नेनेवाविष्कृत-भरत-परिचयेन (छ) दिवसेनेव मित्रानुवर्त्तिना (ज) बौद्धेनेव

महाभारतयोरितिहासत्वात् पृथगुक्तिः। बृहत्कथायां "भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथा"मिति दण्ड्युक्तलक्षणायां कुशली निपुणस्तेन। द्यूतादिकलाकलापस्य द्यूतादिकलाविद्यासमूहस्य पारमेव पारदर्शिना। श्रुतरागिणा शास्त्रज्ञानानुरागिणा। सुभाषितव्यसनिना मधुरवचनासक्तेन। प्रशान्तेन क्रोधरहितेन।

(घ) सुरभीति। सुरभिमासयोर्वसन्तमासयोश्चैत्रवैशाखयोः मारुतेन वायुनेव, सततदक्षिणेन निरन्तरोदारचरितेन वायुपक्षे सर्वदा दक्षिणदिश आगतेन। पूर्णोपमा।

(ङ) हिमेति। हिमगिरेः काननेनेव, अन्तर्मध्ये सरलेन अवक्रेण कुटिलतारहितचित्तेन, तत्काननपक्षे तु अन्तर्मध्ये सरलाः सरलाख्यवृक्षा यस्य तेन। पूर्णोपमा।

(च) लक्ष्मणेनेति। लक्ष्मणेन सौमित्रिणेव, रामाया रमण्याः रामस्य च आराधने मनोऽनुवृत्त्या सन्तोषणे निपुणस्तेन। पूर्णोपमा।

(छ) शत्रुघ्नेनेति। शत्रुघ्नेन द्वितीयेन सुमित्रापुत्रेणेव, आविष्कृतः अभिनयादिना प्रकटितः भरते भरतमुनिप्रणीते नाट्यशास्त्रे परिचयो विशेषज्ञानं येन तेन, अन्यत्र तु आविष्कृतः परिचर्य्यादिना प्रकटितः भरते कैकेयीपुत्रे परिचय आत्मभक्तिपरिचयो येन तेन। पूर्णोपमा।

(ज) दिवसेनेति। दिवसेन दिनेनेव, मित्राणां सुहृदां अनुवर्त्तिना अनुकूलेन, दिवसपक्षे तु मित्रस्य सूर्य्यस्य अनुवर्त्तिना अनुगामिना सूर्य्यस्थितिपर्य्यन्तस्थायिनेत्यर्थः। पूर्णोपमा।

(झ) बौद्धेनेवेति। बौद्धेनेव बौद्धमतावलम्बिना सम्प्रदायविशेषेणेव, सर्वेषां विक्रेयवस्तूनां अस्तिवादे क्रेतुः प्रश्नानन्तरं अस्तित्वभाषणे शूरेण समर्थेन, सर्वप्रकारपण्यपूर्णापणत्वादिति भावः। पक्षान्तरे तु सर्वेषां भूतभौतिकानां बाह्यानां चित्तचैत्तानामाभ्यन्तराणां पदार्थानां अस्तिवादे अस्तित्वभाषणे शूरेण तदस्तित्वस्य युक्त्यादिना समर्थनात्रितान्तदक्षेण। तथा च शारीरकभाष्ये शङ्कराचार्य्याः—"बौद्धसिद्धान्ते एते

সকল দেশের ভাষা শিক্ষা করিয়াছে, বক্র কথা বলিতে নিপুণ, আখ্যায়িকা ও আখ্যান বেশ জানে, সকলপ্রকার লেখা চেনে, রামায়ণ, মহাভারত ও পুরাণ শাস্ত্রের অনুরাগী, বৃহৎ উপাখ্যান বলিতে নিপুণ, দ্যূতপ্রভৃতি সমস্ত কলাবিদ্যায় পারদর্শী, শাস্ত্রজ্ঞানের অনুরাগী, সর্ব্বদাই মধুর বাক্য বলিয়া থাকে; এবং শান্তচিত্ত; (ঘ) বসন্তকালের বায়ু যেমন সর্ব্বদা দক্ষিণদিক্ হইতে চলিতে থাকে, তাহারাও তেমন সর্ব্বদা উদারতা অবলম্বন করিয়া চলে; (ঙ) হিমালয় পর্ব্বতের বনে যেমন সরলনামে বৃক্ষ আছে, তাহাদের চিত্তেও তেমন সরলতা আছে; (চ) লক্ষ্মণ যেমন রামের সন্তোষবিধানে নিপুণ ছিলেন, তাহারাও তেমন রমণীর সন্তোষবিধানে নিপুণ; (ছ) শত্রুঘ্ন যেমন ভরতের প্রতি ভক্তির পরিচয় দিয়াছিলেন, তাহারাও তেমন ভরত-প্রণীত নাট্যশাস্ত্রে দক্ষতার পরিচয় দিয়া থাকে; (জ) দিন যেমন সূর্য্যের অনুবর্ত্তী, তাহারাও তেমন সুহৃদের অনুবর্ত্তী; (ঝ) বৌদ্ধদিগের মধ্যে সর্ব্বাস্তিত্ববাদীরা যেমন সকল পদার্থেরই অস্তিত্ব স্বীকার করে; তাহাদের মধ্যে বাণিজ্যব্যবসায়ীরাও তেমন

सर्वास्तिवाद-(१) सूरेण (ख) सांख्यागमेनेव प्रधान-पुरुषोपेतेन (२) (ग) जिन-धर्म्मेणेव जीवानुकम्पिना (३) (घ) विलासिजनेनाधिष्ठिता, (ङ) सशैलेव प्रासादैः, सशाखानगरेव (४) महाभवनैः, सकल्पवृक्षेव सत्पुरुषैः, दर्शित-

त्रयो वादिनो भवन्ति। केचित् सर्वास्तित्ववादिनः, केचिद्विज्ञानास्तित्वमात्रवादिनः, अन्ये पुनः सर्वशून्यत्ववादिनः। तत्र ये सर्वास्तित्ववादिनो वाह्यमाभ्यन्तरञ्च वस्त्वभ्युपगच्छन्ति भूतं भौतिकं चित्तं चैत्तञ्चेति तांस्तावत् प्रति ब्रूमः।" पूर्णोपमालङ्कारः। अस्तीत्यव्ययं विद्यमानार्थे।

(ग) सांख्येति। सांख्यागमेन कापिलसांख्यशास्त्रेणेव, प्रधानपुरुषैः धनगुणादिसम्पन्नतया श्रेष्ठमानवैः उपेतेन युक्तेन, पक्षान्तरे तु प्रधानं सत्त्वरजस्तमसां साम्यावस्थारूपा प्रकृतिः, पुरुषो नित्यशुद्धबुद्धमुक्तस्वभावः प्रकृतिविकृतिविलक्षणश्चित्स्वरूपः ताभ्यामुपेतेन युक्तेन। तथा च सांख्यसूत्रं—"सत्त्वरजस्तमसां साम्यावस्था प्रकृति"रित्यादि। "न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते।" सांख्यकारिका च—"न प्रकृतिर्न विकृतिः पुरुषः।" पूर्णोपमा।

(घ) जिनेति। जिनधर्म्मेण आर्हतन्यायेनेव, जीवान् सर्वविधान् प्राणिनः अनुकम्पते दयत इति तेन। इदमुभयत्रापि समानं आर्हतानामहिंसावादित्वात्। सर्वदर्शनसंग्रहादावेतन्मतमनुसन्धेयम्। पूर्णोपमा। अहो! महत् प्रकटितमत्र दर्शनशास्त्रनैपुण्यं कविना।

(ङ) विलासीति। विलासिजनेन विलासवता लोकेन, अधिष्ठिता आश्रिता। विलासमाहोज्ज्वलनीलमणिः—"गतिस्थानासनादीनां मुखनेत्रादिकर्म्मणाम्। तात्कालिकन्तु वैशिष्ट्यं विलासः प्रियसङ्गजम्।"

(च) सशैलेति। प्रासादैर्देवभूभुजां वेश्मभिः सशैलेव सपर्वतेव, तेषामत्युच्चत्वादिति भावः। अत्र शैलसंयोगस्योत्प्रेक्षणाद्गुणोत्प्रेक्षालङ्कारः, तेन च प्रासादा एव शैला इति रूपकालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। एवञ्च प्रासादैरिति प्रकृत्यादित्वात् करणे तृतीया। एवमन्यत्रापि। महाभवनैरतिबृहन्मन्दिरैः, शाखानगरमासन्नवर्त्ति क्षुद्रनगरं तत्सहितेव तेषां शाखानगरवदायतत्वादित्याशयः। पूर्ववदलङ्कारो ध्वनिश्च। सत्पुरुषैर्महापुरुषैः सकल्पवृक्षेव तद्वत्तेषामर्थिप्रार्थनापूरणादित्यभिप्रायः। पूर्ववदलङ्कारो ध्वनिश्च। चित्रभित्तिभिरालेख्यसमन्वितभित्तिभिः, दर्शितानि विश्वेषां जगतां सर्ववस्तूनां रूपाण्याकृतयो यया सेव, जगतां सर्वपदार्थानामेव तत्र चित्रितत्वादिति भावः। अत्र विश्वरूपप्रदर्शनक्रियोत्प्रेक्षणात् क्रियोत्प्रेक्षा।

কেহ আসিয়া কোন বস্তু আছে কি না জিজ্ঞাসা করিলে, সকল বস্তুরই অস্তিত্ব স্বীকার করে; (গ) সাংখ্যশাস্ত্রে যেমন প্রকৃতি ও পুরুষ আছে, তাহাদের মধ্যেও তেমন প্রধান প্রধান মনুষ্য আছে; (ঘ) আর জৈনগণের ন্যায় তাহারা সকল প্রাণীর প্রতিই দয়ালু; (ঙ) তথায় বিলাসী জনগণ অধিষ্ঠান করে; (চ) সেই উজ্জয়িনী উচ্চ উচ্চ দেবমন্দিরে ও রাজভবনে যেন পর্ব্বতসমন্বিত, বৃহৎ বৃহৎ অট্টালিকা থাকায় যেন বহুতর উপনগরসংযুক্ত আর মহাপুরুষগণ অবস্থান করায় যেন কল্পবৃক্ষসম্পন্ন বলিয়া

(१) सर्वदा नास्तिवाद...। (२)...पुरुषगुणोपेतेन। (३) क्वचिदयं पाठो नास्ति। सर्वभूतानुकम्पिना।
(४) सशाखेव।

विश्वरूपैव चित्रभित्तिभिः, (च) सन्ध्येव पद्मरागानुरागिणी (१) (छ) अमराधिप-मूर्त्तिरिव मखशतानलधूम-पूता, (ज) पशुपति-लास्यक्रीडेव सुधाधवलाट्टहासा, (झ) वृद्धेव जातरूपक्षया, (ञ) गरुड़मूर्त्तिरिवाच्युतस्थिति-रमणीया, (ट) प्रभातवेलेव प्रबुद्धसर्वलोका, (ठ) शबर-वसतिरिवावलम्बित-(२) चारुचामर-(३)

(छ) सन्ध्येति। सन्ध्या सायंकाल इव, पद्मरागैर्यत्र तत्र सन्निवेशितैस्तदाख्यमणिभिः अनुरागो रक्तिमा, पद्मरागवदनुरागो रक्तिमा च यस्या अस्तीति सा। अत्र पूर्णोपमालङ्कारः।

(ज) अमरेति। अमराधिपस्य मूर्त्तिरिन्द्रस्य शरीरमिव, मखशतस्य बहुतरयज्ञस्य, शतसंख्यकाश्वमेधयज्ञानाञ्च अनलस्य वह्नेः धूमेन पूता पवित्रा। पूर्णोपमा।

(झ) पश्विति। पशुपतेर्लास्यक्रीडेव शिवस्य नृत्यखेलेव, सुधाभिः शुभ्रचूर्णलेपनैः धवलानां शुभ्रीभूतानां अट्टानामट्टालिकानां हासः प्रकाशो यस्यां सा, पक्षान्तरे तु सुधावदमृतवत् धवलः अट्टहासो महाहास्यं यस्यां सा, हासस्य धवलतया वर्णनीयत्वात्। पूर्णोपमा।

(ञ) वृद्धेति। वृद्धा स्थविरा स्त्रीव, जातरूपाणां स्वर्णानां क्षया गृहाणि यस्यां सा, पक्षान्तरे तु जातो वार्द्धक्यादुत्पन्नः रूपस्य सौन्दर्य्यस्य क्षयो विनाशो यस्याः सा। पूर्णोपमा। "निलयापचयौ क्षयौ"इत्यमरः।

(ट) गरुड़ेति। गरुड़स्य मूर्त्तिस्तनुरिव, अच्युता दृढ़निर्म्माणादस्खलिता या स्थितिरवस्थानं तया रमणीया मनोहरा, पक्षान्तरे तु अच्युतस्य विष्णोः स्थित्या तदुपर्य्यवस्थानेन रमणीया। पूर्णोपमा।

(ठ) प्रभातेति। प्रभातवेलेव प्रातःकाल इव, प्रबुद्धाः प्रकृष्टज्ञानशालिनः जागरिताश्च सर्वे लोका जना यस्यां सा। पूर्णोपमा।

(ड) शबरेति। शबरवसतिः किरातवासस्थानमिव, अवलम्बितानि रज्जुभिरालम्बितानि चारुचामराणि सुन्दरवालव्यजनानि येषु तादृशा नागदन्ता हस्तिदन्ता येषु ते तथाविधा धवला गृहा यस्यां सा। पक्षे

বোধ হয়; আর ভিত্তিতে (দেওয়ালে) নানাবিধ অসংখ্য চিত্র থাকায় সেই নগরী যেন জগতের সকল পদার্থের রূপ দেখাইতেছে বলিয়া প্রতীতি হয়; (ছ) সন্ধ্যাকাল যেমন পদ্মরাগমণির ন্যায় রক্তবর্ণ, উজ্জয়িনীও তেমন বহুতর পদ্মরাগমণিখচিত থাকায় রক্তবর্ণ; (জ) ইন্দ্রের শরীর যেমন শত অশ্বমেধযজ্ঞের অগ্নির ধূমে পবিত্র হইয়াছিল, উজ্জয়িনীও তেমন বহুসংখ্যক যজ্ঞের অগ্নির ধূমে পবিত্র হইতেছে; (ঝ) শিবের নৃত্যরূপ খেলা যেমন অমৃতের ন্যায় ধবল অট্টহাস্যসমন্বিত, উজ্জয়িনীও তেমন চূর্ণলেপনে শুভ্রবর্ণ সুশোভিত বহুতর অট্টালিকাসমন্বিত; (ঞ) বৃদ্ধ স্ত্রীলোকের যেমন সৌন্দর্য্য বিনষ্ট হইতে দেখা যায়, উজ্জয়িনীতেও তেমন সুবর্ণময় বহুতর গৃহ দেখা যায়; (ট) গরুড়ের দেহ যেমন বিষ্ণুর অবস্থানে সুন্দর দেখায়, উজ্জয়িনীও তেমন স্থিরভাবে অবস্থান করায় সুন্দর দেখায়; (ঠ) প্রভাতকালে যেমন সকল লোক নিদ্রা হইতে জাগরিত হইয়া থাকে, উজ্জয়িনীতেও তেমন সকল লোক নানাবিষয়ে জ্ঞানী হইয়া থাকে; (ড) ব্যাধগণের বাসস্থানের গৃহগুলি যেমন মনোহর চামর ও হস্তিদন্তে পূর্ণ থাকায়

(१) पद्मरागाढ्या। (२) आलम्बित...। (३) अवलम्बितचामर...।

